ॐ

# ॥ ❁ रत्नमाला ❁ ॥

नैकविधभक्तिस्तुतिग्रन्थेभ्यः
समाकृष्टानां गणेशस्तुति-
देवीस्तुतिरूपाणां
श्लोकानां संग्रहो
गणेशगाथागर्भः

इदं पुस्तकं
स्टेट हाइ स्कूल श्रीनगर इत्यत्र २ सं० अध्यापकेन
पं० गोविन्दराम (भट्ट हुंडू) शर्म्मणा
संस्कृतं संशोधितं च
तदेतत्

❁ पंडित विश्वनाथ एंड सन्स ❁
फोटोग्राफर्स प्रोप्राइटर्स इत्यादि,
इत्येतैः स्वकीये
'कश्मीर प्रताप स्टीम प्रेस श्रीनगर'
इत्याख्याख्याते
मुद्रणायन्त्रे मुद्रयित्वा प्रकाशितम्॥
वि० सन् १९७४ सन् ईस्वी १९१८

Ratnamala



अथ

रत्नमालाभिधा

# श्रीगणेशस्तुतिः ॥

नमः श्रीगणेशाय विघ्नहर्त्रे ॥

ॐ लाक्षासिन्दूरवर्णं सुरवरनमितं मोदकै-
र्मोदितास्यं हस्ते दन्तं दधानं हिमकरसदृशं
तेजसोग्रं त्रिनेत्रम् । दत्ते रत्नाक्षसूत्रं वरप-
रशुधरं साखुसिंहासनस्थं गाङ्गेयं रौद्रमूर्तिं
त्रिपुरवधकरं विघ्नभक्ष्यं नमामि ॥ १ ॥
गौरीपुत्रं त्रिनेत्रं गजमुखसहितं नागयज्ञो-
पवीतं पद्माक्षं सर्वभक्ष्यं सकलजनप्रियं स-
र्वगन्धर्वपूज्यम् । सम्पूर्णं भालचन्द्रं वरद-

मतिबलं हन्तृकं चासुराणां हेरम्बमादिदेवं गणपतिममलं सिद्धिदातारमीडे ॥ २ ॥ जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाद्बलेर्बन्धने स्रष्टौ वारिरुहोद्भवेन विधिना शेषेण धर्तुं धराम् । पार्वत्या महिषासुरप्रमथने सिद्धाधिपैर्मुक्तये ध्यातः पञ्चशरेण लोकविजये पायात्स नागाननः ॥ ३ ॥ यं ब्रह्म वेदान्तविदो वदन्ति परं प्रधानं पुरुषं तथान्ये । विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय ॥ ४ ॥ गजवदनमचिन्त्यं तीक्ष्णदन्तं त्रिनेत्रं बृहदुदरमनन्तं दन्तमाले दधानम् । परशुचषकपद्मद्वन्द्वहस्तारविन्दं हरियुगलनिविष्टं श्रीगणेशं भजामि ॥ ५ ॥ अभयवरदपाणिं लड्डुपात्रं सुदन्तं नरपतिजपमालां नागपाशांकुशौ च । कनकमयविचित्रं मुद्गरं पाणिपद्मे परशुमपि च तीक्ष्णं वि-

घ्नराजं नमामि ॥ ६ ॥ गणेशाय नमः प्रह्वा-
ञ्जिताम्बुजभानवे । सितदंष्ट्रांकुरस्फीतवि-
घ्नौघतिमिरेन्दवे । ७। विघ्नेशो नः स पायाद्वि-
हृतिषु जलधिं पुष्कराग्रेण पीत्वा यः समु-
द्धृत्य हस्तं वमति तदखिलं दृश्यते व्योम्नि
देवैः । क्वाप्यम्भः क्वापि विष्णुः क्वचन कम-
लभूः क्वाप्यनन्तः क्व च श्रीः क्वाप्यौर्वः क्वापि
शैलाः क्वचन मणिगणाः क्वापि नक्रादिस-
त्त्वाः ॥ ८ ॥ विघ्नेशं विश्ववन्द्यं सुविपुलयशसं
लोकरक्षाप्रदक्षं साक्षात्सर्वापदासु प्रशमन-
सुमतिं पार्वतीप्राणसूनुम् । प्रायः सर्वासुरे-
न्द्रैः ससुरमुनिगणैः साधकैः पूज्यमानं का-
रुण्येनान्तरायामितभयशमनं विघ्नराजं न-
मामि ॥ ९ ॥ उच्चैर्ब्रह्माण्डखंडद्वितयसहच-
रं कुम्भयुग्मं दधानः प्रेङ्खन्नागारिपक्षप्र-
तिभटविकटश्रोत्रतालाभिरामः देव्याः श-

म्भोरपत्यो भुजगपतितनुस्पर्धिवर्धिष्णुहस्तः
त्रैलोक्याश्चर्यमूर्तिः स भवतु सततं भूतये कु-
ञ्जरास्यः ॥ १० ॥ दयाकर दयारूप दयामू-
र्ते दयावते । जगतां तु दयाकर्त्रे सर्वकर्त्रे न-
मोऽस्तु ते ॥ ११ ॥ कर्मणा मनसा वाचा ये प्रप-
न्ना विनायकम् । ते तरन्ति महाघोरं संसारं
कामवर्जिताः ॥ १२ ॥ सर्गारम्भेप्यजाताय
बीजरूपेण तिष्ठते । धात्रा कृतप्रणामाय ग-
णाधिपतये नमः ॥ १३ ॥ नमो नमो गज-
न्द्राय एकदन्तधराय च । नम ईश्वरपुत्राय
गणेशाय नमो नमः ॥ १४ ॥ माता यस्य उ-
मादेवी पिता यस्य महेश्वरः । मूषको वाहनं
यस्य स नः पायाद्गणाधिपः ॥ १५ ॥ वन्दे
वराभयपिनाककपालखड्ग खट्वाङ्गहस्तमुसु-
लाब्जकरं त्रिनेत्रम । भीमं जटामुकुटिनं क-
मलासनस्थं कश्मीरवासममलं गणराज·

माद्यम् ॥ १६ ॥ रक्ताङ्गरागं परश्वक्षमाला-
स्वदन्तपाणिं सितलड्डुपात्रम् । गजान-
नं सिंहरथाधिरूढं गणेश्वरं विघ्नहरं नमामि
॥ १७ ॥ संसिद्ध्यर्थनमत्सुरासुरमिलन्मौ-
लिस्थितप्रोल्लसत् – सद्रत्नप्रभवप्रकृष्टविभ-
वप्रेङ्खन्मयूखाज्वलत् । श्रेयो विघ्नमहाभ-
यप्रशमने दिव्यं यदेकौषधं भूयान्नो द्विर-
दाननांघ्रिकमलद्वन्द्वं तदिष्टाप्तये ॥ १८ ॥ बि-
भ्रत्पञ्चमुखानि योयमुदितः स्वातन्त्र्यमा-
त्रात्मना शक्तेर्वैभवतः परप्रतिहतद्वैताख्य-
विघ्नव्ययः । एकीभूतमुखः सकारणगणा-
नुग्राहिणा तेजसा देवः संप्रति भासतां म-
यि यथातत्त्वं गणाधीश्वरः ॥ १६ ॥ बालो-
बालपराक्रमः सुरगणैः संप्रार्थ्यसेहर्निशं
गायन्किंपुरुषाङ्गणाविरचितैः स्तोत्रैरभिष्टू-
यसे । हाहाहूहुकतुम्बुरुप्रभृतिभिस्त्वं गी-

यसे नारदस्तोत्रैरद्भुतचेष्टितैः प्रतिदिनं प्रोद्घोष्यसे सामभिः ॥ २० ॥ त्वां नमन्ति सुरसिद्धचारणास्त्वां यजन्ति निखिला द्विजातयः । त्वां पठन्ति मुनयः पुराविदस्त्वां स्मरन्ति यतयः सनातनाः ॥ २१ ॥ परं पुराणं गुणिनं महान्तं हिरण्मयं पुरुषं योगगम्यम् । यमामनन्त्यात्मभुवं मनीषिणो विपश्चितं कविमप्यक्षयं च ॥ २२ ॥ ॐ गणानान्त्वा गणपतिं सुरेन्द्रं कविं कवीनामतिमेध्यविग्रहम् । जेष्टराजमृषभं केतुमेकमानःशृण्वन्नूतिभिः सीद शश्वत् ॥ ॥ २३ ॥ नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये । नमो नमोनन्तदयैकसिन्धवे नमो नमोनन्तसुखैकदायिने ॥ २४ ॥ नमो नमः शाश्वतशान्तिहेतवे क्षमादयापूरितचारुचेतसे । ग-

जन्द्ररूपाय गणेश्वराय ते परस्य पुंसः प्र-
थमाय सूनवे ॥ २५ ॥ नमो नमः कार-
णकारणाय ते नमो नमो मङ्गलमङ्गला-
त्मने । नमो नमो वेदविदां मनीषिणामु-
पासनीयाय नमो नमो नमः ॥ २६ ॥
हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिनेत्रं
रसादाश्लिष्टं प्रियया सपद्मकरया स्वाङ्क-
स्थया सन्ततम् । बीजापूरगदाधनुस्त्रिशि-
खयुक्चक्राब्जपाशोत्पलव्रीह्यग्रस्थविषाणर-
त्नकलशां हस्तैर्वहन्तीं भजे ॥ २७ ॥
देवं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सु-
न्दरं विघ्नेशं मदगन्धलोलमधुपव्यालोल-
गण्डस्थलम् । दन्ताघातविदारिताहितज-
नं सिन्दूरशोभाकरं वन्दे शैलसुतासुतं ग-
णपतिं सिद्धिप्रदं कामदम् ॥ २८ ॥ द्वि-
चतुर्दशवर्णभूषिताङ्गं मुसलाम्भोजधरं म-

होपवीतम् । द्विमृगाधिपगामिनं त्रिनेत्रं हरपुत्रं द्विरदाननं भजेहम् ॥ २६ ॥ जटामुकुटमण्डितं त्रिनयनं परं षड्भुजं सतीसरनिवासिनमसुरनाशिनं लोहितम् । वराभयपिनाकिनं त्वसिकपालभृच्छूलिनं गणैर्वृतगणेश्वरं कमलगं च भीमाकृतिम् ॥ ३० ॥ गजाननं भूतगणादिसेवितं कपित्थजाम्बूफलसारभक्षणम् । उमापतेः शोकविनाशकारणं नमामि विघ्नेश्वरमाशु सिद्धिदम् ॥ ३१ ॥ लम्बोदरैकवदनः कमलासनस्थश्चन्द्रार्धमौलिरमलो भुजगेन्द्रहारः । भीमोष्टबाहुरुदितार्कमरीचिरष्टसिद्धिप्रदो भवतु वाञ्छितसिद्धिदो नः ॥ ३२ ॥ हिमाद्रिशीतं द्विभुजं भुजङ्गैः परेतगात्रं शिखिविष्टरस्थम् । नगेन्द्रकन्याप्रियपुत्रमाद्यं हृदि स्मरेभीष्टप्रदं कुमारम् ॥ ३३ ॥ ध्यायेद्वा-

लदिवाकरद्युतिनिभं दैत्येन्द्रशत्रुं तथा देवे-
न्द्रप्रमुखप्रशस्तयशसं देदीप्यमानं दिवि ।
सुग्रीवादिसमस्तवानरयुतं स्वव्यक्ततत्त्वप्रि-
यं संरक्तायतलोचनं पवनजं रुद्रात्मजं चि-
न्तये ॥ ३४ ॥ योऽभ्यर्चितः सुरगणैर्वरसि-
द्धिहेतोश्छेत्तुं भयानि च करे परशुं दधानः ।
देवः सशम्भुदयितापरिवर्धितश्रीर्विघ्नान्नि-
वारयतु वारणराजवक्त्रः ॥ ३५ ॥ श्रीगणेशं
नुमो यस्य प्रसादात्प्राप्तबुद्धयः । प्रौढबुद्धिषु
हृष्यन्ति मादृशा अपि बालिशाः ॥ ३६ ॥

## श्रीगणाधिपतये नमो नमः

अद्रिराजजेष्टपुत्र हे गणेश विघ्नहन्
पद्मयुग्मदन्तलड्डुपात्रमाल्यहस्तक ।
सिंहयुग्मवाहनस्थ भालनेत्रशोभित
कल्पवृक्ष दानदक्ष भक्तरक्ष रक्ष माम् ॥ १ ॥

एकदन्त वक्रतुण्ड नागयज्ञसूत्रक
सोमसूर्यवह्निमेयमानमातृनेत्रक ।
रत्नजालचित्रमाल भालचन्द्रशोभित
कल्पवृक्ष दानदक्ष भक्तरक्ष रक्ष माम् ॥ २ ॥

वह्निसूर्यसोमकोटिलक्षतेजसाधिक
द्योतमानविश्वहेतिवेचिवर्गभासक ।
विश्वकर्तृविश्वभर्तृविश्वहर्तृवन्दित
कल्पवृक्ष दानदक्ष भक्तरक्ष रक्ष माम् ॥ ३ ॥

स्वप्रभावभूतभव्यभाविभावभासक
कालजालबद्धवृद्धबाललोकपालक ।
ऋद्धिसिद्धिबुद्धिवृद्धिभुक्तिमुक्तिदायक
कल्पवृक्ष दानदक्ष भक्तरक्ष रक्ष माम् ॥ ४ ॥

मूषकस्थ विघ्नभक्ष्य रक्तवर्णमाल्यधृत्
मोदकादिमोदितास्य देववृन्दवन्दित
स्वर्णदीसुपुत्र रौद्ररूप दैत्यमर्दन
कल्पवृक्ष दानदक्ष भक्तरक्ष रक्ष माम् ॥ ५ ॥

ब्रह्मशम्भुविष्णुजिष्णुसूर्यसोमचारण-
देवदैत्यनागयक्षलोकपालसंस्तुत
ध्यानदानकर्मधर्मयुक्त शर्मदायक
कल्पवृक्ष दानदक्ष भक्तरक्ष रक्ष माम् ॥ ६ ॥
आदिशक्तिपुत्र विघ्नराज भक्तशङ्कर
दीनानाथदीनलोकदैन्यदुःखनाशक ।
अष्टसिद्धिदानदक्ष भक्तवृद्धिदायक
कल्पवृक्ष दानदक्ष भक्तरक्ष रक्ष माम् ॥ ७ ॥
शैवशक्तिसाङ्ख्ययोगशुद्धवादिकीर्तित
बौद्धजैनसौरकार्मपञ्चरात्रतर्कित ।
वल्लभादिशक्तियुक्त देव भक्तवत्सल
कल्पवृक्ष दानदक्ष भक्तरक्ष रक्ष माम् ॥ ८ ॥
देवदेव विघ्ननाश देवदेवसंस्तुत
देवशत्रुदैत्यनाश जिष्णुविष्णुकीर्तित ।
भक्तवर्गपापनाश बुद्धबुद्धिचिन्तित
कल्पवृक्ष दानदक्ष भक्तरक्ष रक्ष माम् ॥ ९ ॥

श्रीगणेश लोकपालपूजितांघ्रियुग्मक
धन्यलोकदैन्यनाश पाशराशिभेदक
रम्यरक्त धर्मसक्तभक्तचित्तपापहन्
कल्पवृक्ष दानदक्ष भक्तरक्ष रक्ष० ॥ १० ॥

ये पठन्ति विघ्नराजभक्तिरक्तचेतसः
स्तोत्रराजमेनसोपयुक्तशुद्धतेजसः ।
ईप्सितार्थमृद्धिसिद्धिमत्र सिद्धभाषिताः
प्राप्नुवन्ति ते गणेशपादपद्मभाविताः ॥ ११ ॥

इति श्रीगणेशगाथास्तोत्रम् ॥

अथ

रत्नमालाभिधा

# देवी स्तुतिः

ॐ भक्तानुग्रहकारिणी भगवती देवाधिदेवे-
श्वरी दीनानाथकृपावती स्वजननी भक्ता-
नुरक्ता सती । ॐकाराक्षरवासिनी सुरनु-
ता सर्वेश्वरी सर्वदा भूयान्नो वरदा सदा
ह्यभयदा कामेश्वरी कामदा ॥ १ ॥ वरां-
कुशौ पाशमभीतिमुद्रां करैर्वहन्तीं कमला-
सनस्थाम् । बालार्ककोटिप्रतिमां त्रिनेत्रां
भजेहमाद्यां भुवनेश्वरीं ताम् ॥ २ ॥ शङ्ख-
त्रिशूलशरचापकरां त्रिनेत्रां तिग्मेतरांशु-
कलयाविकसत्किरीटाम् । सिंहास्थितामसु-
रसिद्धनुतां च दुर्गां दूर्वानिभां दुरितदुःखह-
रां नमामि ॥ ३ ॥ माता भवानी च पिता
भवानी बन्धुर्भवानी च गुरुर्भवानी । वि-

द्या भवानी द्रविणं भवानी यतो यतो याः-
मि ततो भवानी ॥ ४ ॥ श्रीशङ्खचक्रमुस-
लाम्बुजयुग्महस्तां नागेन्द्रहारवलयाङ्कित-
कण्ठमालाम् । सिन्दूरकुंकुमसहस्रमरीचि-
दीप्तां श्रीशारिकां त्रिनयनां हृदये स्म-
रामि ॥ ५ ॥ बालार्ककोटिद्युतिमिन्दुचूडां
वरासिचक्राभयबाहुमाद्याम । सिंहाधिरू-
ढां शिववामदेहलीनां भजे चेतसि शारि-
केशीम ॥ ६ ॥ या कुन्देन्दुतुषारहारधव-
ला या श्वेतपद्मासना या वीणावरदण्डम-
ण्डितकरा या शुभ्रवस्त्रान्विता या ब्रह्माच्यु-
तशङ्करप्रभृतिभिर्देवैस्सदा वन्दिता सा मां
पातु सरस्वती भगवती निःशेषजाड्यापहा
॥ ७ ॥ या श्रीर्वेदमुखी तपःफलमुखी नि-
त्यं च निद्रामुखी नानारूपधरी सदा जय-
करी विद्याधरी शङ्करी । गौरी पीनपयोध-

री रिपुहरी मालास्थिमालाधरी सा मां पा-
तु सरस्वती भगवती निःशेषजाड्यापहा ॥
८ ॥ या देवी शिवकेशवादिजननी या वै ज-
गद्रूपिणी या ब्रह्मादिपिपीलिकान्तजनता-
नन्दैकसन्दायिनी । या पञ्चप्रणमद्द्विरेफन-
लिनी या चित्कलामालिनी सा पायात्पर-
देवता भगवती श्रीराजराजेश्वरी ॥ ९ ॥
या माया मधुकैटभप्रमथिनी या माहिषो-
न्मूलिनी या धूम्रेक्षणचण्डमुण्डमथिनी या
रक्तबीजाशिनी । शक्तिः सुम्भनिसुम्भदैत्य-
दलिनी या सिद्धलक्ष्मी परा सा देवी न-
वकोटिमूर्तिसहिता मां पातु माहेश्वरी ॥
१० ॥ या खड्गं डमरुं त्रिशूलपरशू खट्वा-
ङ्गपाशौ गदां चक्रं मुद्गरचापबाणवरदा-
भीतीः कपालांकुशौ । धत्ते तोमरपुस्तके
च मुसलं दोर्भिर्दशैः साष्टकैर्देवीभिः परि-

वारिता शशिधरा सा शारिका पातु नः ॥
११ ॥ बीजैः सप्तभिरुज्ज्वलाकृतिरसौ या
सप्तसप्तिद्युतिः सप्तर्षिप्रणतांघ्रिपङ्कजयुगा
या सप्तलोकार्तिहृत् । प्रेतप्रायमपञ्जरं कृ-
तवती प्रद्युम्नमुन्मोचितुं देवीसप्तकसंयु-
ता भगवती श्रीशारिका पातु नः ॥ १२ ॥
ब्रह्माणं च पुरन्दरं शिवहरी देवान्समस्ता-
न्मुनीन् या दृष्ट्या दयया विलोकयति सा
देव्यम्बिका पार्वती । चक्रस्था निजबोध-
भासितजगच्छान्तात्मिका सर्वगा सान्द्रा-
नन्दप्रदा परा भगवती पायात्सदा शारि-
का ॥ १३ ॥ भक्तानां सिद्धिधात्री नलिन-
युगकरा श्वेतपद्मासनस्था लक्ष्मीरूपा त्रि-
नेत्रा हिमकरवदना सर्वदैत्येन्द्रहन्त्री । वा-
गीशी सिद्धिकर्त्री सकलमुनिजनैः सेविता
या भवानी नौमि त्वां नौम्यहं त्वां हरिह-

रनमितां शारिकां नौमि नौमि ॥ १४ ॥ किं किं दुःखं दनुजदलिनि क्षीयते न स्मृतायां का का कीर्तिः कुलकमलिनि ख्याप्यते न स्तुतायाम् । का का सिद्धिः सुरवरनुते प्राप्यते नार्च्चितायां कं कं योगं त्वयि न चिनुते चित्तमालम्बितायाम् ॥ १५ ॥ आरक्ताभां त्रिनेत्रां मणिमुकुटवतीं रत्नताटङ्करम्यां हस्ताम्भोजैः सपाशांकुशमदनधनुःसायकैर्विस्फुरन्तीम् । आपीनोत्तुङ्गवक्षोरुहतटविलुठत्तारहारोज्ज्वलाङ्गीं ध्यायाम्यम्भोरुहस्थामरुणनिवसनामीश्वरीमीश्वराणाम् ॥ १६ ॥ ज्वालापर्वतसंस्थितां त्रिनयनां पीठत्रयाधिष्ठितां ज्वालाडम्बरभूषितां सुवदनां नित्यमदृश्यां जनैः । षट्चक्राम्बुजमध्यगां वरगदाम्भोजाभयान्बिभ्रतीं चिद्रूपां सकलार्थदीपनकरीं ज्वालामुखीं

नौम्यहम् ॥ १७ ॥ संसारार्णवतारिणीं र-
विशशिकोटिप्रभांसु प्रभां पापातङ्कनिवा-
रिणीं हरिहरब्रह्मादिभिः संस्तुताम् । दा
रिद्र्यस्य विनाशिनीं सुकृतिनां जाड्यं ह-
रन्तीं भृशमज्ञानान्धमतेः कवित्वजननीं
ज्वालामुखीं नौम्यहम् । १८ ॥ ज्वालमु
खि महाज्वाले ज्वालापिङ्गललोचने । ज्वा-
लातेजे महातेजे ज्वालामुखि नमोस्तु ते
॥ १९ ॥ नमो भगवति ज्वाले कालि त्रि-
पुरसुन्दरि । सर्वजीवरक्षाकारे ज्वालामु-
खि नमोस्तु ते ॥ २० ॥ किं वोर्ध्वतः किं
परितोन्वधस्ताज्जातेति निर्णेतुमशक्यरू-
पा । जाज्वल्यमानाविरतं दधातु ज्वाला-
मुखी मुख्यतमां विभूतिम् ॥ २१ ॥ आ-
काश चण्डिका देवी पाताले भुवनेश्वरी ।

२२ ॥ अघोरव्याधिनाशी च घोररोगविध्वं-
सिनी । अष्टादशभुजा दुर्गा शारिका श्या-
मसुन्दरी ॥ २३ ॥ श्रीशारिके शरण्ये त्वं
मयि दासे कृपां कुरु । ऋणं रोगं भयं शो-
कं रिपून्नाशय सत्वरम् ॥ २४ ॥ प्रद्युम्नशि-
खरासीनां मातृचक्रोपशोभिताम् । पीठे-
श्वरीं शिलारूपां शारिकां प्रणमाम्यहम्
॥ २५ ॥ अमा चैव तु कामा च चार्वङ्गी
टङ्कधारिणी । तारा च पार्वती चैव यक्षि-
णी शारिकाष्टमी ॥ २६ ॥ शान्तिं नयस्या-
शु जनस्य पापं रिक्तत्वमर्थेन निराकरोषि ।
कार्यं निषञ्चस्यपि भाग्यपूरैः प्रगीयसेऽतः
खलु शारिका त्वम् ॥ २७ ॥ या देवी स-
र्वभूतेषु दयारूपेण संस्थिता नमस्तस्यै नम-
स्तस्यै नमस्तस्यै नमो नमः ॥ २८ ॥ शारदा
वरदा देवी मोक्षदात्री सरस्वती नमस्तस्यै

नमस्तस्यै नमस्तस्यै नमो नमः ॥ २६ ॥ तां भवानीं भवानीतक्लेशनाशविशारदाम् । शारदां शारदाम्भोजासितासिंहासनां नुमः ॥ ३० ॥ श्रीश्रीशैले स्थिता या प्रहसितवदना पार्वती शूलहस्ता वह्निसूर्येन्दुनेत्रा त्रिभुवनजननी षड्भुजा सर्वशक्तिः । शाण्डिल्येनोपनीता जयति भगवती भक्तिगम्यानुयाता सा नः सिंहासनस्था ह्यभिमतफलदा शारदा शं करोतु ॥ ३१ ॥ मूलाधाराद्धुतवहकलामिश्रितं भूर्भुवःस्वब्रह्मस्थानात्परमगहनात्तत्सवितुर्वरेण्यम् । भर्गो देवः शशिकलमये धीमहीत्येकरूपं धियो यो नः पिब तदमृतं चोदयान्नः परं तत् ॥ ३२ ॥ प्रातः काले कुमारी कुमुदकलिकया जप्यमालां जपन्ती मध्याह्ने प्रौढरूपा विकसितवदना चारुनेत्रा विशाला ।

सन्ध्यायां वृद्धरूपा गलितकुचयुगे मुण्डमालां वहन्ती सा देवी दिव्यदेहा हरिहरनमिता पातु नो ह्यादिमुद्रा ॥ ३३ ॥ पूर्वाह्ने भाति रक्ता हुतवहवदना हंसयानैकसंस्था मध्याह्ने चापि शुक्ला वृषवरवहना नागयज्ञोपवीता । कृष्णा चैवापराह्णे गरुडरथधरा शङ्खचक्रादिहस्ता सा सन्ध्या पातु नित्यं वरशुकवहना ब्रह्मरूपा त्रिकाला ॥ ३४ ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् । गायत्रीं वरदाभयांकुशकरां शूलं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ ३५ ॥ चतुर्भुजामर्कसहस्रकोटिभां त्रिलोचनां हारकिरीटशोभिताम् । चतुर्मुखाऽङ्कोपगतां महोज्ज्वलां वेदेश्वरीं पञ्चमुखीं नमाम्यहम् ३६॥ पद्मासन-

 

स्थां करपङ्कजाभ्यां रक्तोत्पले सन्दधतीं त्रिनेत्राम्। सम्बिभ्रतीमाभरणानि रक्तां पद्मावतीं पद्ममुखीं नमामि ॥ ३७ ॥ पद्मेशपद्मोद्भवपद्मबन्धुमुखाः सुराः पादरजोऽपि यस्याः। चिन्वन्त आशा न गताश्च पारं पद्मावती सा मम पद्मगास्ताम् ॥ ३८ ॥ मातर्नमामि कमले कमलायताक्षि श्रीविष्णुहृत्कमलवासिनि विश्वमातः। क्षीरोदजे कमलकोमलगर्भगौरि लक्ष्मि प्रसीद सततं नमतां शरण्ये ॥ ३९ ॥ या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः। श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां त्वां नताः स्म परिपालय देवि विश्वम् ॥ ४० ॥ अक्षस्रक्परशूगदेषुकुलिशान्पद्मं धनुष्कुण्डिकां दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम्। शूलं पा-

शसुदर्शनौ च दधतीं हस्तैः प्रवालप्रभैः सेवे
सैरिभमर्दिनीमिह महालक्ष्मीं सरोजास्थि-
ताम् ॥ ४१ ॥ नागाधीश्वरविष्टरां फणिफ-
णोत्तंसोरुरत्नावलीभास्वद्देहलतां दिवाकर-
निभां नेत्रत्रयोद्भासिताम्। मालाकुम्भकपा-
लनीरजकरां चन्द्रार्धमौलिं परां सर्वज्ञेश्वर-
भैरवाङ्कनिलयां पद्मावतीं चिन्तयेत् ॥४२॥
रे मूढाः किमयं वृथैव तपसा कायः परि-
क्लिश्यते यज्ञैर्वा बहुदक्षिणैः किमितरे रि-
क्तीक्रियन्ते गृहाः। भक्तिश्चेदविनाशिनी
भगवतीपादद्वयी सेव्यतामुन्निद्राम्बुरुहा-
तपत्रसुभगा लक्ष्मीः पुरो धावति ॥ ४३ ॥
ताडद्वल्लीं नित्याममृतसरितं पाररहितां म-
लोत्तीर्णां ज्योत्स्नां प्रकृतिमगुणग्रन्थिगह-
नाम्। गिरां दूरां विद्यामविनतकुचां विश्व-
जननीमपर्यन्तां लक्ष्मीमभिदधति सन्तो

भगवतीम् ॥ ४४ ॥ आसीना सरसीरुहे स्मितमुखी हस्ताम्बुजैर्बिभ्रती दानं पद्मयुगाभयौ च वपुषा सौदामिनीसन्निभा। मुक्ताहारविराजमानाविपुलस्तुङ्गस्तनोद्भासिनी पायान्नः कमला कटाक्षविभवैरानन्दयन्ती हरिम् ॥ ४५ ॥ देवीं शुद्धस्फुटिकधवलां पञ्चवक्त्रां त्रिनेत्रां दोर्भिर्युक्तां दशभिरभितः शोभितां रत्नहारैः। काद्यं मुण्डं सृणिममसृणं शूलमच्छाच्छधारं सारात्सारं वरमनवरं दक्षहस्तैर्वहन्तीम् ॥ ॥ ४६ ॥ उत्खट्वाङ्गं कठिनविकटं टङ्कमूर्जस्वदङ्कं पाशं ज्ञानामृतरसमयं पुस्तकं चाभयं च। कामं वामैः शुभकरतलैर्बिभ्रतीं विश्ववन्द्यां पद्मां प्रेतोपरिकृतपदां सिद्धलक्ष्मीं नमामि ॥ ४७ ॥ इच्छाशक्तिप्रथमलहरीमस्वरान्तःप्रवाहगर्भीभूतां त्रिवि-

धमुदितां पञ्चधा प्रस्फुरन्तीम् । सम्यग्देवीं स्फुटिकधवलां शुद्धकुन्देन्दुवर्णां रुद्रारूढां दशभुजयुतां क्षामगात्रीं नमामि ॥ ४८ उद्यद्भास्वत्समाभाविहितरविजयां मुण्डखण्डावनद्धां ज्योतिर्मौलिं त्रिनेत्रां विविधमणिलसत्कुण्डलामण्डिताङ्गीम् । हारग्रैवेयकाञ्चीगुणमणिनिलयामेकचित्राम्बराढ्यामम्बां पाशांकुशाढ्याभयवरसकरां सिद्धिधात्रीं नमामि ॥ ४९ ॥ अक्षसूत्राम्बुजकरामादर्शकलशान्विताम् । मीनपद्मासनासीनां वितस्तां शरणं श्रये ॥ ५० ॥ संसारसागरसमुद्धरणैकसारां धर्मध्वजां शुभफलां ब्रतसिद्धिहेतुम् । वैडूर्यशुभ्रमणिकाञ्चनगर्भगौरीं त्वां नौमि पापशमनीं वरदां वितस्ताम् ॥ ५१ ॥ तीर्थैश्च कोटिगुणितैश्च सहस्रसङ्ख्यैर्गङ्गाप्रयागगयनैमि-

षपुष्कराद्यैः । नित्यं प्रयाति परमामृतता-
यरूपा या तां नमाम्यघहरीं वरदां वित-
स्ताम् ॥ ५२ ॥ ये त्वां प्रभातसमये सत-
तं स्मरन्ति भावप्रहृष्टमनसो भवमोक्षल-
क्ष्मीम् । तेषां सदा भवति निर्मलदेहका-
न्तिस्त्वां नौमि पापशमनीं वरदां वितस्ता-
म् ॥ ५३ ॥ सन्तः शंसन्त्यमुत्र त्रिजगति
जगतीमण्डलं सारभूतं तत्रापि क्ष्माधरं तं
त्रिभुवनजननी जन्मने यं प्रपेदे । तत्रा-
प्याहुः शुभानां विघटितविपदां वेश्म क-
श्मीरदेशं त्वं यत्रानुग्रहार्थं प्रवहसि भ-
विनामों नमस्ते वितस्ते ॥ ५४ ॥ गङ्गे त्रै-
लोक्यसारे सकलसुरवधूधौतविस्तीर्णतो-
ये पुण्ये ब्रह्मस्वरूपे हरिचरणरजोहारिणि
स्वर्गमार्गे । प्रायश्चित्तं परं नस्तवजलक-
णिका ब्रह्महत्याद्यघानां कस्त्वां स्तोतुं स-

मर्थास्त्रिजगदघहरे देवि गङ्गे प्रसीद ॥ ५५
गङ्गैव मुक्तिदा चेत्रे गङ्गा किल्बिषनाशिनी ।
त्रैलोक्यवरदे गङ्गे हरिगङ्गे नमोस्तु ते ॥ ५६
हरतीयं महापापं गङ्गेश्वरसमुद्भवा । मातृ-
पितृहिते गङ्गे हरिगङ्गे नमोस्तु ते ॥ ५७ ॥
दृष्टा जन्मशताधर्मं स्पृष्टा जन्मशतत्रयम् ।
स्नाता जन्मसहस्रं च हन्ति गङ्गा कलौयुगे
॥ ५८ ॥ अन्नपूर्णे सदा पूर्णे शङ्करे प्राणव-
ल्लभे । ज्ञानवैराग्यसम्पूर्णे भिक्षां देहि न-
मोस्तु ते ॥ ५९ ॥ नमः कल्याणदे देवि न-
मः शङ्करवल्लभे । नमो भक्तिप्रदे देवि अ-
न्नपूर्णे नमोस्तु ते ॥ ६० ॥ नित्यानन्दक-
री वराभयकरी सौन्दर्यरत्नाकरी निर्धूता-
खिलघोरपावनकरी प्रत्यक्षमाहेश्वरी । प्रा-
लेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णे-

श्वरी ॥ ६१ ॥ योगानन्दकरी रिपुक्षयकरी धर्मैकनिष्ठाकरी चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी । सर्वैश्वर्यकरी तपःफलकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ६२ ॥ उर्वी सर्वजनेश्वरी हिमवतो माता कृपासागरा नारीनीलसमानकुन्तलधरी नित्यान्नदानेश्वरी । सर्वत्राणाकरी सदा सुखकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ६३ ॥ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि । दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय दयार्द्रचित्ता ॥ ६४ ॥ या द्वादशार्कपरिमण्डितमूर्तिरेका सिंहासनास्थितिमतीमुरगैर्वृतां च । देवीमनक्षगतिमीश्वरतां

प्रपन्नां तां नौमि भर्गवपुषं परमार्थराज्ञीम् ॥ ६५ ॥ उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां सिंहासनोपरिगतामुरगोपवीताम् । खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां राज्ञीं भजामि विकसद्वदनारविन्दाम् ॥ ६६ ॥ यत्पादपङ्कजतलेऽमरमूर्धमौलिन्यस्तेन्द्रनीलमणिसन्ततयः पतन्ति । किञ्जल्कपानरतमुग्धमधुव्रतत्वं राज्ञी सदा भगवती जननीव नोऽव्यात् ॥ ६७ ॥ शीतांशुबालार्ककृशानुनेत्रां चतुर्भुजामेणत्वगासनस्थाम् । शङ्खाब्जशूलासिधरां महेशीं राज्ञीं भजेऽहं तुहिनाद्रिरूपाम् ॥ ६८ ॥ स्मृतैवान्तर्गतं पुंसां हरन्ती सकलं मलम् । जयत्येषा महाराज्ञी भक्तानां कामदायिनी ॥ ६९ ॥ त्रिजगन्मोहने ईड्ये मिहिरीभूतसद्गुणे । नमोस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ७० ॥

शेषाशेषमुखागरायगुणे गुणगणाश्रिये। नमोस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ७१ ॥ सुरासुरनरसिद्धवन्दनीयपदाम्बुजे। नमोस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ७२ ॥ चराचरजगत्सृष्टिस्थितिसंहारकारिणि। नमोस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ७३ ॥ भक्तकल्पलतेऽनल्पवाङ्माधुर्यजितामृते। नमोस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ७४ ॥ ब्रह्मविष्णुमहेशानवन्दिते गिरिनन्दिनि। नमोस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ७५ ॥ भक्तानां भीमसंसारपारावारप्रतारिणि। नमोस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ७६ ॥ निर्गुणे निष्क्रिये नित्ये सच्चिदानन्दरूपिणि। नमोस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ७७ ॥ राज्ञीस्तोत्रमिदं

पुण्यं त्रिसन्ध्यं प्रयतः पठन् । असंशयं वि-
शेषेण वशयेदखिलं जगत् ॥ ७८ ॥ दुर्गां
त्वां च सरस्वतीं भगवतीं ज्वाला मुखीं शा-
रदां राज्ञीं शारिकया युतामघहरीं त्वां भद्र-
कालीं शिवाम् । वागीशीं त्रिपुरां तथैव
समयां पीठेश्वरीं सिद्धिदां गायत्रीं कम-
लासनस्य वनितां श्रीकुब्जिकां कालिकाम्
॥ ७६ ॥ उद्यच्चन्द्रकलावतंसितशिखां क्रीं-
कारवर्णोज्ज्वलां श्यामां श्याममुखीं रवीन्दु-
नयनां क्रींवर्णरक्ताम्बराम् । भैंबीजाङ्कित-
मानसां शवगतां नीलाम्बरोद्भासितां स्वा-
हालङ्कृतसर्वगात्रलतिकां भैंभद्रकालीं भजे
॥ ८० ॥ श्यामां श्याममुखीं विलोलवपुषं
सत्कोटराक्षीं शिवां विंशत्युत्तररूपिणीं म-
धुमदोन्मत्तां च रक्ताम्बराम् । ब्रह्ममुण्ड-
शिवादिविष्णुरशनाहस्तामनङ्गोज्ज्वलां प्रे-

तस्यां हृदयाम्बुजे भगवतीं भैंभद्रकालीं
भजे ॥ ८१ ॥ गौराङ्गीं धृतपङ्कजां त्रिनय-
नां श्वेताम्बरां सिंहगां चन्द्रोद्भासितशेख-
रां स्मितमुखीं धुर्यां वहन्तीं धुरम् । वि-
ष्णिवन्द्रप्रणताकृतिं च त्रिदशैः सम्पूजितां-
घ्रिद्वयीं गौरीं मानसपङ्कजे भगवतीं भक्ते-
ष्टदां तां भजे ॥ ८२ ॥ ऐन्दव्या कलया व-
तंसितशिरोविस्तारिनादात्मकं तद्रूपं जन-
नि स्मरामि परमं सन्मात्रमेकं तव । यत्रो-
देति पराभिधा भगवती भासां हि तासां
पदं पश्यन्तीमनु मध्यमा विहरति स्वैरं हि
सा वैखरी ॥ ८३ ॥ कस्मादम्ब विलम्बसे
कुरु कृपां केनापि रूपेण मे जिह्वाग्रे वस स-
न्निधेहि हृदये वाग्देवि तुभ्यं नमः । तन्नि-
र्यान्तु ममास्यकुञ्जकुहराद्धारादिभूषोतिर-
स्कारिण्यो रसपूरबन्धुरतया चेतो हरन्त्यो

गिरः ॥ ८४ ॥ बालार्कायुतभास्वरां त्रिनयनां मन्दस्मितोद्यन्मुखीं राजच्चन्द्रकलाधरां सुकबरीपुष्पालिवृन्दाकुलाम् । कस्तूरीतिलकां घनस्तनभरां पाशांकुशांवैक्षवं कोदण्डं कुसुमेषुमेव दधतीं हस्ताम्बुजैस्तां भजे ॥ ८५ ॥ सौवर्णाम्बुजमध्यगां त्रिनयनां सौदामिनीसन्निभां शङ्खं चक्रवराभयानि दधतीमिन्दोः कलां बिभ्रतीम् ग्रैवेयाङ्गदहारकुण्डलधरामाखण्डलाद्यैः स्तुतां ध्यायेद्विन्ध्यनिवासिनीं शशिमुखीं पार्श्वस्थपञ्चाननाम् ॥ ८६ ॥ श्यामाङ्गीं शशिशेखरां निजकरैर्दानं च रक्तोत्पलं रत्नाढ्यं चषकं परं भयहरं संबिभ्रतीं शाश्वतीम् । मुक्ताहारलसत्पयोधरघटीं नेत्रत्रयोल्लासिनीं वन्देऽहं हरिपूजितां हरवधूं रक्तारविन्दास्थिताम् ॥ ८७ ॥ वक्त्रैकेन त्रि-

राजितां त्रिनयनैर्युग्मादिषट्त्रिंशता बाहू-
द्यासिमहायुधाद्यतकराम्भोजैश्च सिंहास-
नाम् । विश्वद्रुह्महिषासुरस्य हृदयं शूलेन
निर्भेदिनीं दुर्गाख्यां प्रणमामि लोकजन-
नीं त्वां रक्तगौरद्युतिम् ॥ ८८॥ मातर्म म-
धुकैटभोग्रमहिषप्राणापहारोद्यते हेलानि-
र्मितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि ।
निःशेषीकृतरक्तबीजदलिनि नित्यं निसु-
म्भापहे सुम्भध्वंसिनिसंहराऽशु दुरितं दुर्गे
नमस्तेऽम्बिके ॥ ८९ ॥ आदिक्षान्तमऽह-
र्निशं तु नदती या शब्दराशिस्तथा पश्य-
न्तीत्युत मध्यमा खलु परा तस्याः परा वै-
खरी । सर्वप्राणिशयाखिलार्तजननी त्वे-
का चतुर्धा स्थिता मातः सा त्वमचिन्त्यरू-
पमहिमा वागीश्वरीत्युच्यसे ॥ ९० ॥ चा-
पं पञ्चशरान्सृणिं विषधरं दोर्भिश्चतुर्भिः

सदा बिभ्रत्यद्भुतरूपरक्तविभवैरेकानना सर्वदा । दयाब्धोऽद्य सदाशिवस्थविलसद्रक्ताब्जसंस्था सदा देवी श्रीत्रिपुरा पुरारिनिरता सम्यग्वरं भूतये ॥ ६१ ॥ बालामिन्दुकलावतंसितशिखां सूर्येन्दुवह्नीक्षणां मालापुस्तकचापपाशयुगलं दोर्भिर्वहन्तीं सदा । उद्यत्सूर्यसहस्रदीप्तिसदृशीं स्मेराननाम्भोरुहां ध्यायेऽहं त्रिपुरां परां भगवतीं त्रैलोक्यरक्षापराम् ॥ ६२ ॥ मातः श्रीत्रिपुरे परात्परतरे देवि त्रिलोकीमहासौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम् । उद्यद्भानुसहस्रनूतनजपापुष्पप्रभं ते वपुः स्वान्ते मे स्फुरतु त्रिलोकनिलयं ज्योतिर्मयं वाङ्मयम् ॥ ६३ ॥ रक्ताब्धौ रत्नपोते रविदलकमलाभ्यन्तरे सन्निषण्णां रक्ताङ्गीं रत्नमौलिं स्फुरितशशिकलां स्मेर-

वक्त्रां त्रिनेत्राम् । बीजापूरेषुपाशांकुशमदन-
धनुःसत्कपालानि हस्तैर्बिभ्राणामानताङ्गीं
स्तनभरभरणाद्ऽम्बिकामाश्रयामः ॥ ६४
चापं पाशांकुशसरसिजान्यंऽकुशं पुष्पबा-
णान्बिभ्राणां तां करसरसिजै रत्नमौलिं
त्रिनेत्राम् । हेमाब्जाभां कुचभरनतां रत्न-
मञ्जीरकाञ्चीग्रैवेयाद्यैर्विलसिततनुं भाव-
येच्छक्तिमाद्याम् ॥ ६५ ॥ चन्द्रार्कानलको-
टिनीरदरुचिं पाशांकुशौ चाऽशुगान्मुण्डं
खड्गमऽभीतिमीश्वरवरं हस्ताम्बुजैरष्टाभिः ।
कामेशानशिवोपरिस्थितपदां त्र्यक्षां वहन्तीं
परां श्रीचिन्तामणिमन्त्रराजवपुषं ध्याये-
न्महाषोडशीम् ॥ ६६ ॥ त्र्यर्णात्र्यश्रानिवि-
ष्टमूर्तिरधिका मुद्रात्रयोद्भासिता या धत्तेऽ-
कुशपाशबाणनिचयं चापं चतुर्भिर्भुजैः ।
देवीभिस्तिसृभिस्तथाष्टाभिरथो दिग्दग्म-

नुख्यातिभिर्वस्वष्टप्रमिताभिरष्टभिरथो जीयाज्जगन्मातृका ॥ ९७ ॥ प्रसीद परदेवते मम हृदि प्रभूतं तमो विदारय दरिद्रतां दलय देहि सर्वज्ञताम् । विधेहि करुणानिधे चरणपद्मयुग्मं स्वकं विदारितजरामृतिं त्रिपुरसुन्दरि श्रीशिवे ॥ ९८ या वह्नीन्दुदिवाकरात्त्रिमधुरा या रक्तपद्मासना रत्नाकल्पविराजितांघ्रिलतिका बालेन्दुचूडोज्ज्वला । अक्षस्रुक्सृणिपाशपुस्तककरा या बालभानुप्रभा तां वन्दे सुरसिद्धवन्दितपदामिष्टार्थसिद्ध्यै सदा ॥ ९९ ॥ शब्दात्मिकासि विमलर्ग्यजुषां निदानमुद्गीथरम्यपदपाठवतां च साम्नाम् । देवि त्रयी भगवती भवभावनाय वार्तासि सर्वजगतां परमार्तिहर्त्री ॥ १०० ॥ ते सम्मता जनपदेषु धनानि तेषां तेषां यशांसि न च

सीदति बन्धुवर्गः। धन्यास्त एव निभृता-
त्मजभृत्यदारा येषां सदाऽभ्युदयदा भव-
ती प्रसन्ना॥ १०१॥ धर्म्याणि देवि सकला-
नि सदैव कर्माण्यत्यादृतः प्रतिदिनं सुकृ-
तीकरोति। स्वर्गं प्रयाति च ततो भवती-
प्रसादाल्लोकत्रयेऽपि फलदा ननु देवि तेन
॥ १०२॥ देवि प्रसादपरमा भवती भवा-
य सद्यो विनाशयति कोपवती कुलानि। वि-
ज्ञातमेतदऽधुनैव यदस्तमेतन्नीतं बलं सु-
विपुलं महिषासुरस्य॥ १०३॥ ईषत्सहा-
सम्ऽमलं परिपूर्णचन्द्रबिम्बानुकारि कन-
कोत्तमकान्ति कान्तम्। अत्यद्भुतं प्रहृत-
मात्तरुषा तथापि वक्त्रं विलोक्य सहसा
महिषासुरेण॥ १०४॥ दृष्ट्वापि देवि कुपि-
तं भ्रुकुटीकरालमुद्यच्छशाङ्कसदृशच्छवि य-
न्न सद्यः। प्राणान्मुमोच महिषस्तदतीव

चित्रं कैर्जीव्यते हि कुपितान्तकदर्शनेन ॥ १०५ ॥ तनीयांसं पांसुं तव चरणपङ्केरुहभवं विरिञ्चिः सञ्चिन्वन्विरचयति लोकानविकलम् । वहत्येनं शौरिः कथमपि सहस्रेण शिरसां हरः संक्षुभ्यैनं भजति भसितोद्धूलनविधिम् ॥ १०६ ॥ अविद्यानामन्तस्तिमिरमिहिरोद्दीपनकरी जडानां चैतन्यस्तवकमकरन्दस्रुतिसिरा । दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवती ॥ १०७ ॥ त्वदन्यः पाणिभ्यामभयवरदो दैवतगणस्त्वमेका नैवासि प्रकटितवराभीत्यभिनया । भयात्त्रातुं दातुं वरमपि च वाञ्छासमधिकं शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥ १०८ ॥ सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नी-

पोपवनवति चिन्तामणिगृहे । शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां भजन्ति त्वां धन्याः कति च न चिदानन्दलहरीम् ॥ १०६ ॥ भवानि त्वं दासे मयि वितर दृष्टिं सुकरुणामिति स्तोतुं वाञ्छन्कथयति भवानि त्वमिति यः । तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदाम् ॥ ११० ॥ सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरिणीं विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः । करालं यत्क्ष्वेडं कवलितवतः कालकलना न शम्भोस्तन्मूलं तव जननि ताटङ्कमहिमा ॥ १११ ॥ षट्चक्रम् ॥ तडित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिगहनं प्रविष्टं स्वाधारं पुनरपि सुधावृष्टिवपुषा । किमप्यष्टात्रिंशत्किरणसकलीभूतमनिशं भजे धाम श्यामं

कुचभरनतं बर्बरकचम् ॥ ११२ ॥ चतुष्प-
त्रान्तः षड्दलभगपुटान्तास्त्रिवलयस्फुरद्वि-
द्युद्वह्निद्युमणिनियुताभद्युतियुते । षडश्रं
भित्त्वादौ दशदलमथ द्वादशदलं कलाश्रं
च द्व्यश्रं गतवति नमस्ते गिरिसुते ॥ ११३
प्रकाशानन्दाभ्यामऽविदितचरीं मध्यपद-
वीं प्रविश्यैतद्द्वन्द्वं रविशशिसमाख्यं कवल-
यन् । प्रविश्योर्ध्वं नादं लयदहनभस्मी-
कृतकुलः प्रसादात्ते जन्तुः शिवमकुलमऽम्ब
प्रविशति ॥ ११४ ॥ महीं मूलाधारे कमऽ-
पि मणिपूरे हुतवहस्थितिं स्वाधिष्ठाने हृ-
दि मरुतमाऽऽकाशमुपरि । मनोऽपि भ्रूमध्ये
सकलमपि भित्त्वा कुलपथं सहस्रारे पद्मे स-
ह रहसि पत्या विहरसि ॥ ११५ ॥ यत्षट्प-
त्रं कमलमुदितं तस्य या कर्णिकाख्या यो-
निस्तस्याः प्रथितमुदरे यत्तदोङ्कारपीठम् ।

तास्मिन्नऽन्तः कुचभरनतां कुराडलीतः प्रवृत्तां श्यामाकारां सकलजननीं सन्ततं भावयामः ॥ ११६ ॥ मूलालवालकुहरादुदिता भवानि निर्भिद्य षट्सरासिजानि तडिल्लतेव । भूयोपि तत्र विशसि ध्रुवमराडलेन्दुनिष्यन्दमानपरमामृततोयरूपा ॥ ११७ ॥ कालाग्निकोटिरुचिमऽम्ब षडध्वशुद्धावाऽऽप्लावनेषु भवतीमऽमृतौघवृष्टिम् । श्यामां घनस्तनतटां सकलीकृतौ च ध्यायन्त एव जगतां गुरवो भवन्ति ॥ ११८ ॥ श्रीमत्सुराऽसुराराध्यचरणाम्भोरुहद्वयीम् । चराचरजगद्धात्रीं चरिडकां प्रणमाम्यहम् ॥ ११६ अरिशङ्खकृपाणखेटबाणान्सुधनुःशूलकतर्जनीं दधाना । भवतां महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥ १२० ॥ रक्ताम्बरां सिंहगतां स्मितास्यां पाशांकुशौ

नैकवर्टीं दधानां । विद्यां शूलं पङ्कजं वै व-
हन्तीं ध्यायामि त्वां देवदेवीमऽपर्णाम् ॥
१२१ ॥ सृष्टौ संस्थापनाय त्वऽपहरणविधौ
मोहनेऽनुग्रहेपि सर्वेषामऽर्गलानां निजम-
हिमवशादक्रमणैव याऽलम् । नित्यं क्रीडा-
प्रसक्ता रचयति सकलं स्वात्मशक्त्या प्रप-
ञ्चं सा नस्त्राणाय भूयादऽभिमतफलदा भ-
द्रकाली च काली ॥ १२२ ॥ कालाम्बुवाह-
द्युतिमिन्दुवक्त्रां तारावलीशोभिपयोधरा-
ढ्याम् । कपालपाशांकुशशूलहस्तां नीला-
म्बरां यामवतीं नमामि ॥ १२३ ॥ खड्गं च-
क्रगदेषुचापपरिघाञ्शूलं भुसण्डीं शिरः
शङ्खं सन्दधतीं करैस्त्रिनयनां सर्वाङ्गभूषा-
वृताम् यामऽस्तौत्स्वपिते हरौ कमलजो ह-
न्तुं मधुं कैटभं नीलाश्मद्युतिमाऽऽस्यपाद-
दशकां सेवे महाकालिकाम् ॥ १२४ ॥ अ-

त्रस्त्रकपरशू० (४१श्लो०) १२५ ॥ उद्यद्भानुसहस्त्रकान्तिमऽरुणाक्षौमां शिरोमालिकां रक्तालिप्तपयोधरां जपवटीं विद्यामऽभीतिं वरम् हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियं देवीं बद्धहिमांशुरत्नमुकुटां वन्दे समन्दस्मिताम् ॥ १२६ ॥ कालाभ्राभां कटाक्षैरऽरिकुलभयदां मौलिबद्धेन्दुलेखां शङ्खं चक्रं कृपाणीं त्रिशिखमपिकरैरुद्वहन्तीं त्रिनेत्राम् । सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं ध्यायेद्दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः ॥ १२७ ॥ घण्टाशूलहलानि शङ्खमुसुले चक्रं धनुः सायकं हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम् । गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महापूर्वामत्र सरस्वतीमनु भजे सुम्भादिदैत्यार्दिनीम् ॥

१२८ ॥ सिंहस्था शशिशेखरा मरकतप्रख्या चतुर्भिर्भुजैः शङ्खं चक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिता । आमुक्ताङ्गदहारकङ्कणरणत्काञ्चीक्कणन्नूपुरा दुर्गा दुर्गतिहारिणी भवतु नो रत्नोल्लसत्कुण्डला ॥ १२९ ध्यायेयं रत्नपीठे शुककलपठितं शृण्वतीं श्यामलाङ्गीं न्यस्तैकांघ्रिं सरोजे शशिशकलधरां वल्लकीं वादयन्तीम् । कल्हाराबद्धमालानियमितविलसच्चूलिकां रक्तवस्त्रां मातङ्गीं शङ्खपात्रां मधुमदविवशां चित्रकोद्भासिभालाम् ॥ १३० ॥ नागाधीश्वर० (४२श्लो०) ॥ १३१ ॥ बन्धूककाञ्चननिभं रुचिराक्षमालां पाशांकुशौ च वरदं निजबाहुदण्डैः । बिभ्राणमिन्दुशकलाभरणं त्रिनेत्रमर्धाम्बिकेशमनिशं वपुराश्रयामि ॥ १३२ उत्तप्तहेमरुचिरां रविचन्द्रवह्निनेत्रां धनुःशरयु-

ताङ्कुशकामपाशान् । रम्यैर्भुजैश्च दधतीं शिवशक्तिरूपां कामेश्वरीं हृदि भजामि धृतेन्दुलेखाम् ॥ १३३ ॥ उद्यद्दिनद्युतिमिन्दुकिरीटां तुङ्गकुचां नयनत्रययुक्ताम् । स्मेरमुखीं वरदांकुशपाशाऽभीतिकरां प्रभजे भुवनेशीम् ॥ १३४ ॥ विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् । हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरे ॥ १३५ ॥ बालार्कमण्डलाभासं चतुर्बाहुं त्रिलोचनाम् । पाशांकुशशरांश्चापं धारयन्तीं शिवां भजे ॥ १३६ ॥ पद्मासनस्थां० (३७श्लो०) ॥ १३७ ॥ ये भावयन्त्यमृतवाहिभिरंऽशुजालैराप्यायमानभुवनाममृतेश्वरीं त्वाम् । ते लङ्घयन्ति ननु

मातरलङ्घनीयां ब्रह्मादिभिः सुरवरैरपि कालकक्ष्याम् ॥ १३८ ॥ शर्वाणि सर्वजनवन्दितपादपद्मे पद्मच्छदच्छविविडम्बितनेत्रलक्ष्मि । निष्पापमूर्तिजनमानसराजहंसि हंसि त्वमाऽऽपदमनेकविधां जनस्य १३९ तव न का किल न स्तुतिरम्बिके सकलशब्दमयी किल ते तनुः । निखिलमूर्तिषु मे भवदन्वयो मनसिजासु बहिष्प्रसरासु च ॥ १४० ॥ इति विचिन्त्य शिवे शमिताऽशिवे जगति जातमयत्नवशादिदम् । स्तुतिजपार्चनचिन्तनवर्जिता न खलु का च न कालकलास्ति मे ॥ १४१ ॥ रोगानशेषानपहंसि तुष्टा पुष्णासि कामान्सकलानभीष्टान् । त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥ १४२ ॥ पूर्णेन्दोः शकलैरिवाति बहुलैः पीयूषपूरैरिव

क्षीराब्धेर्लहरीभरैरिव सुधापङ्कस्य पिण्डैरि-
व । प्रालेयैरिव निर्मितं तव वपुर्ध्यायन्ति
ये श्रद्धया चित्तान्तर्निहतार्तितापविपदस्ते
सम्पदं बिभ्रति ॥ १४३ ॥ कृपापाङ्गालोकं
वितर तरसा साधुचरिते न ते युक्तोपेक्षा
मयि शरणदीक्षामुपगते । न चेदिष्टं दद्या-
दऽनुपदमऽहो कल्पलतिका विशेषः सामा-
न्यैः कथमितरवल्लीपरिकरैः ॥ १४४ ॥ अ-
यः स्पर्शे लग्नं सपदि लभते हेमपदवीं य-
था रथ्यापाथः शुचि भवति गाङ्गौघमिलि-
तम् । तथा तत्तत्पापैरतिमलिनमन्तर्यदि
मम त्वयि प्रेम्णासक्तं कथमिव न जायेत
विमलम् ॥ १४५ ॥ आलम्बाज्जननि त्व-
दीयचरणाम्भोजद्वयस्यासकृद्वैणालघुना
मया सुरगणा व्रीडास्पदं प्रापिताः । औ-
दासीन्यमथो समाश्रयसि चेद्दैवाहते त्वं

मयि केषां वा वदनं कथं वद शिवे पश्या-
म्यनालम्बनः ॥ १४६ ॥ तत्त्वातत्त्वविशार-
दे भगवति श्रीशारदे शारदे मातर्भारति
तत्तमोऽपनय मेऽमेयप्रमासिद्धिदे । संश-
यं विनियन्तुमल्पमपि यन्नो पुष्पदन्ता-
दिभिर्येनायं क्षपितान्तरायनिचयो निःश्रे-
यसं प्राप्नुयाम् ॥ १४७ ॥ यदुन्मीलनयुक्त्यै-
व विश्वमुन्मीलति क्षणात् । तामभीष्टफ-
लोदारकल्पवल्लीं शिवां भजे ॥ १४८ ॥ र-
क्षणीयं वर्धनीयं बहुमान्यमिदं प्रभो । सं-
सारदुर्गतिहरं भवद्भक्तिमहाधनम् ॥ १४६
प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी तृ-
तीयं चण्डघण्टीति कूष्माण्डेति चतुर्थक-
म् । पञ्चमं स्कन्दमातेति षष्ठं कात्यायिनी-
ति च सप्तमं कालरात्रीति महागौरीति चा-
ष्टमम् नवमं सिद्धिधात्रीति नव दुर्गाः प्र-

कीर्तिताः ॥ १५० ॥ ॐ सुभगायै विद्महे काममालिन्यै धीमहि तन्नो दुर्गा प्रचोदयात् ॥ ३ ॥ श्री ईश्वर उवाच । :—

## 'महाविद्या जगन्माता'

इत्यादि भवानीसहस्रनाम प्रारम्भः ।

इति श्रीरत्नमालायां श्रीदेवीस्तुतिः
समाप्ता
भक्तानां शुभाय भूयात् ॥

